अथ यतिः—

मयि कथं कुपितासि [1]भामिनि वत विधेहि यथोचितम् ।

अथाभोगः—

कर्णकार्मुकमिलितमेतं लोललोचनशायकम् ।

त्रिपुटः—

बपुसि मम कमलाक्षि निक्षिप विफलभावं
भजतु सहसा कुपितमन्मथधनुरिदम् ।

यतिः—

मुरभिदिति चाटुपटुकुशलो दिशतु [2]गजपतिमङ्गलम् ।

शुद्धायामुह्यसुदाहरणम् । अत्र चतुर्दशमात्रोऽन्तरखण्डः । द्वादशमात्रः प्रान्तावान्तरखण्डः । सप्तमात्रायां भङ्गी ।

**निःसारिकमाह—**

निःसारिकस्याद्ध्रुवलक्षणः । द्रुतद्वन्द्वाल्लघुद्वन्द्वम् । यथा—

मल्लाररागेण—

ति आ इ आ इ आ विजयं जयधनं रणसीमनि लभस्व
इ आ तेजोभर गञ्जितदिनकर दानमानरञ्जित गुणिवर
धीर वीर करुणासागर महिमहिलानागर इआ ।
तवपाणौ कृपाणमन्तकरसनासममाकलयन्ती सुरतरुणी!
शात्रवतरुणी नयनवारि मुञ्चति आ इ आ इआ अ इअ इआ ।
इअ अइ अन्त्य आ अ इआ अइ आ
आ आं आ आं आ आ आ आं
नहि नहि तवसमान इहरे ।।ध्रु।।
कीर्त्तिस्तव कुन्दति कुमुदति चन्द्रति हरशैलति हासति
हरति परं हंसति हीरति हारति घनसारति इआ ।
पुनस्तिआ इ आ इत्यादि
अत्रावृत्तिस्तु खण्ड[3]चतुष्टयानन्तरं—
कृशणकवेर्भाषितमिदम् ।

---

1. ख—भाविनि 2. ख—नरपति 3. क—त्रया

इह चतुर्दशमात्रोऽवान्तरखण्डः। त्रयोदशमात्रः प्रान्तावान्तरखण्डः। षष्ठ्यां दशम्यां मात्रायां भङ्गी। अत्र षट्लघ्वक्षरोच्चारणकालो मात्रा इति केचित्।

मण्ठमाह—

मण्ठो लघुयुगं गुरुः। चत्वारोलघवोऽशब्दाः स्वलक्ष्मा अशब्दाः शब्दरहिताः स्वलक्ष्मा मण्ठलक्ष्मा।

मल्लार रागेण—

सुन्दरि तव वदनमिन्दुरमृतमधरपल्लवम्
बाहुयुगं कल्पलता कौस्तुभ इह यौवनम्।
शृणु कामिनि किमिति सुधा मन्दरधरणीहृता
देवगणैरतिरभसात् सति वपुसि तवामले
मथितोऽम्बुधिरधिकलाभ कालकूट हेतवे ॥ध्रु॥
एवं हरिपरिभाषितरसायनं राधिका
निपीय मुदमनिशमाप कृष्णदासभाषितम् ॥

अस्य बन्धादिकं रूपके वक्ष्यते।

झम्पकमाह—

उभयलक्षणः। निर्विरामद्रुतद्वन्द्वं लघुः झम्पकः विरामरहितद्रुतद्वन्द्वमिति पूर्वानुरोधेन। द्रुतद्वन्द्वमित्येवोक्तिः साधीयसी। केचित्तु सविरामद्रुतद्वन्द्वमिति पठन्ति। भवेदेवम् यतोऽत्र अनुभवस्तथैव। अत्र ध्रुवलक्षणे उह्यमुदाहरणम्।

मण्ठलक्षणो यथा—

मल्लाररागेण।

अचिररुचिरुचिरुचिरनवजलदजाले।
नीपवनघनपवनसञ्चारमूले ॥
केकिकुलविपुलरुतसन्ततकराले।
दर्दुरध्वनिभरैरहह वाचाले ॥
नागतो हरिरयम् किमिह घनकाले ॥ध्रु॥
मिलतु सखि कथमयम् सुखैरिवैरि
सिन्धुराधिपनृपतिचेतोविहारी ॥

अत्र दशादिविंशत्यधिकमात्रोऽवान्तरखण्डः। एतत् खण्डापेक्षया द्वित्रिमात्रान्यूनः प्रान्तखण्डः। पञ्चम्यां पञ्चम्यां मात्रायां भङ्गी।

**त्रिपुटमाह—**

द्विलक्षणः। द्रुतत्रयं विरामान्तं त्रिपुटः। ध्रुवलक्षणमुह्यमुदाहरणम्।

मण्ठलक्षणो यथा—

सिन्धुराधिप वीरतवरिपुनागरीनयनाम्बुनिवहै
र्मृण्मयं महिमण्डलं मृदु किमिति नैव विलीयते।
ज्ञातमत्र महीश सन्ततमम्बु शुष्यति तेजसा तव
ति आ इ अइ अइ अइइ अइ अइ
तिअइ अइ अइ इअ इअ इअ इअ इ आ आ आ आ
आ आ आ आ आ
तपनशतसम रोचिषा ॥ ध्रु ॥
चित्रमेतन्नखलु निरुपम निखिलविक्रमशालिनि त्वयि
ति आ इ अइ अइ अई अई ईय इ अई
कृष्णदासकविना भणितमिति रे।

यतिबन्धः एवास्य बन्धः। गानलालित्यमेव भिन्नम्।

**अड्डतालमाह—**

अड्डो द्विलक्षणः। सविरामद्रुतद्वन्द्वं लघुश्च। अस्येदानीं लोके दोआड़मान इति। प्रसिद्धिः।

अयं ध्रुवलक्षणो यथा—

मल्लाररागेण

[1]प्रणमन्तु पूर्णं परात्परमधीशम्।
पालिता परिमिता परमनुजवारम ॥ [2]खण्डः॥
[3]दुर्धराखिलधराधरमनुदारुतनुमम्भोदसोदर-
द्युतिहरं सारम् ॥ ध्रुव ॥

---

1. ख—प्रणमत पूर्णपराधीपरमधीशम्। 2. ख—खण्डः ईति पाठः नास्ति।
3. ख—दुर्धर धरा धार मनु दारु तनु मम्भोदसोदर द्युतिधरं सारम्।

अधिजलधितटघटितवटनिकटवासम्।
दासजनदर्शनप्रकटमृदुहासम् ॥

मण्ठलक्षणमुदाहरणं मृग्यम् । अस्य झंपक वन्ध एव वन्धादि । गानलालित्यं भिन्नम् । केचित्तु ।

[1]लघोर्द्रुतद्वयेन स्यात् शङ्कः शृङ्गारवीरयोः ।
शान्ते शीलो विरामान्तद्रुतद्वन्द्वाल्लघोर्मतः ॥ १६ ॥

इति शङ्कशीलाख्यौ द्विप्रकरावड्डुतालाविति मन्यन्ते ।

रूपकमाह—

उभयलक्षणः। सविरामद्रुतद्वन्द्वाद्रूपकः ।

ध्रुवलक्षणो यथा—

मल्लार रागेण

अहि अं दे मुहं देउ चण्डिआ अद्धचन्द मण्डिआ
खण्डपरशु घरणि खरखग्गखुण्ड वइरि निअर रुहिर पाण तोषिआ।
चण्डमुण्डखण्डखण्डकरण कम्म मम्म मुहि अ
भूषणा भुअ मुलमिलिअ कण्डलिव इ कङ्कणा रुण्ड खण्ड-
कुण्डलादि मण्डालाग्ग सोहिणि ॥ ध्रु ॥
सग्गठिई फल अकरा सकअ लोअ दुखहरा सेवअ सअ दिण्ण
वरासुररखण्ड तप्पला
करुणामअ तरल हिआ अलिअ वेर अणि नग आ कमल अम्भ
परम हिआ कण्णदास वण्णिआ ।

मण्ठलक्षणमुह्यमुदाहरणम् । अत्र द्वादशमात्रोऽवान्तरखण्डः । एकादशमात्राप्रान्तावान्तरखण्डः। षष्ठमात्रायं भङ्गी। अनुक्तवन्धानामन्येषां तालानामेव वन्धः । गानलालित्यमप्येकं सर्वेषाम् । तदुक्तम्—

कुड्डुकाद्येकतालीनां यतित्रिपुटयोस्तथा।
झंपाड्डुतालयोर्वन्धसमावेशः समः स्मृतः ॥ १७ ॥
अन्ये रूपकवन्धे स्युर्निःसारी नान्यवन्धगा ॥ ईति ॥

---

1. श्लोकोऽयं हरिनायकस्य संगीतसारग्रन्थेऽपि वर्त्तते।

एवं चेत् कथं एकस्मिन् वन्धे तालद्वयगानं संपद्यते । उच्यते । तालो हि घातविशेषोनियतसमयः । यद्येकस्मिन् वन्धे घातविशेषेण तालविशेषा उत्पद्यन्ते तदा केयमाशंका । यत्रतु भिन्नाद् गानलालित्यादेकस्मिन् वन्धे तालद्वयगानं तत्राशङ्कापि नास्ति । यथा यतिस्त्रिपुटयोः झंपाङ्डुतालयोः ।

एकतालीमाह—

मण्ठलक्षणा । द्रुतेनैकेनैकताली । यथोदाहृतं गीतं आदितालमण्ठलक्षणे । समानवन्धत्वात् । तदेव गीतं गानलालित्यवशादेकताल्यां गीयते । मतान्तरे इयमप्यालापयुता भवति । एतन्मूलकमेव । प्रवन्धे एकतालितः पूर्वं आलापविन्यासं कुर्वन्ति । एवं । नवभिस्तालैरयं सूड़ः ।

मतान्तरे कुड्डुकमाह—

कुड्डुको मण्ठलक्षणः । द्रुतद्वन्द्वाल्लघुद्वन्द्वम् । ननु निःसारीतालेनैक्यमापतितम् । सत्यम् । वन्धस्य गानलालित्यं भिन्नः भवेदेव । तालस्यास्य प्रायशः क्षुद्रगीतेष्वेव प्रयोगो दृश्यते इति तथैवोदाहियते ।

नट्टरागेण

किञ्चिदुदञ्चय चञ्चलनयने सञ्चितवहुलावण्यम् ।
वदनमिदं विधुमण्डलमधुना मुञ्चतु मानमगण्यम् ॥
किमिति करोति कृशोदरि रोषम्
मदनमहानलविकलशरीरं मामव भज परितोषम् ॥ध्रु॥
वचनमुदीरय मधुरालापिनि मृदुमन्दस्मितकान्तम् ।
किंचन सिञ्च सुधारसविन्दुभिरङ्गमिदं मम तान्तम् ॥
राधामाधवकेलिकलारसखचितं [1]नवमविगीतम् ।
सुखयतु सज्जनचित्तं सततं कृष्णदासकविगीतम् ॥-

अमूमेवेदानीं लोकाः पड़िताल [2]सरिमानं च कथयन्ति । आदितालवदस्य वन्धादि ।

उपाड्डुतालमाह—

द्विलक्ष्मोपाड्डुतालकः । द्रुतेनैकेन । ध्रुवलक्षणमुह्यमुदाहरणम् ।

---

1. क—नवमधिगीतम् । 2. ख—सरिमानं च इति पाठः नास्ति ।

मण्ठलक्षणो यथा—

[1]नट्टरागेण ।

सुन्दरि तोर वदन चन्द्रमण्डलजित लेआ ।
आकाश वा खिन्नभानुकिरण तपइ आ ।
आरे रे इन्दु पूर्णतनु [2]मन अभिमत वाञ्छिता ।
पुनिम संझ रागरुधिर भरित अङ्ग अम्वरा ।
कलङ्क कपट छरित तनु लाजे तेजइ जीविता ॥ध्रुव॥
रासरङ्गरभस[3]रसिक हरिवचने राधिका
मुदितमन्न अन्नुखन्न कृष्णदास [4]भण्णिता ।

अस्य वन्धादिकं रूपकवत् । धरणवशात्तालः संपद्यते वन्धपार्थक्यादेकतालितो भिन्नं लालित्यं भवति । अमूं इदानीं उपाडुमानं लोकाः कथयन्ति ।

**सर्वेषामपि गीतानामौज्वल्यमाह—**

सर्वेऽमी हृद्या गीतगुणैर्युताः । उत्कर्षहेतुभिर्गीतगुणैर्युताश्चेदेकतालास्तदा उपादेयत्वमेतेषां भवतीति सालगसूड़ः कथितः । किञ्च । सूड़ोऽयं यदा प्रवन्धप्रकारकधातुघटितो भवेत्तदा प्रवन्धोऽपि भवति । उदाहरणं—

धन्नासीरागेण—

शरदसंगि वृन्दावन सुन्दर पूर्णचन्द्ररुचि [5]भाजिदिगन्तर
काशभासशुभमेदिनि परिसर निर्जलजलधरपाण्डर अम्वर ॥
कमलकुमुदशुचि कालिन्दिनीर राजहंससित पुलिन मनोहर
नन्दनन्दन आनन्दने किमे शुद्ध वेश ऋतु राजितु आ ॥
इत्यादितालः ॥

शरद ऋतुराज एहु राजित दिगन्ता ।
पेख्खि वहु हरष हरि मदनरसवन्ता ॥
कालिन्दितटनिकट कुञ्जे वसन्ता ।
[6]रासरसे केल्ल मन सह गोपकान्ता ॥

---

1. ख—नट । 2. ख—मई मत वाञ्छिता । 3. ख—भरणि । 4. ख—भणन्ति, क—भणिज्जे । 5. ख—राज । 6. ख—रासरम्भकेलिमनह गोपकान्ता ।

निखिलजन नयनमन रूपे हरन्ता ।
निरुपमा लावण्य सकलसुखदेन्ता ॥
इति झम्पकः ॥

आ वेणुधरि हरि वादन करुरे
वन हरिण पक्षिगण धुनि शुनिरे
आरे निश्चला तनुजनु योग साधनुरे ।
इति अड्डतालः

वेणुधुनि शुणि गोपिजन्ना
कुसुमशरशर वेधि तन्ना
एकु समये तेजु भवना
सर्वसुख कल [1]काह्नुआ ॥
इति त्रिपुटः ॥

आ आ नन्दनन्दन लागि कामिनि नगन [2]ले आ
इति यतिः ॥

वेणुधुन्नि अन्नुसारि गोपनारिरङ्गिनी ।
पुलकपूर पुरि कपोल स्वेदबिन्दुसङ्गिनी ॥
[3]धाइ वेग मन्न आग पाछुलाग सहचरी ।
प्राणनाथ [4]अभिसरल्ल सकलसङ्ग परिहरि ॥
इति सण्ठः ॥

पेखतुरे ब्रजतरुणीजन [5]वृन्दावननयनानन्दन
कायकान्ति नवघनशोभन तरुण मनमोहन इआ
शिखिशिखण्डमण्डितकुन्तल
मालतिमाल गुञ्ज मञ्जुल
गण्डस्थलविलुलित मुखजितविधुमण्डल इआ ।
इति निःसारिक ॥

---

1. ख—खानुआ । 2. क—लेइआ । 3. क, ख—धावइ वेगे मन्न आगे पाछुलागे—क, ख
4. क, ख—अभिसरह्ले—क, ख । 5. क—वृन्दवन नयनारन्दनि

कनककलितकङ्कणकर किङ्किणिपदलम्बितम् ।
मधुरमुरलिमोहनधुनि अधरविम्बचुम्बितत् ॥
प्राणनाथ सनिध मिलले रङ्गे गोपवालिका ।
सानन्दे देइ नयने नयन नीलनलिनमालिका ॥

इति उपाड्डुतालः ॥

नासे मुकुताफल उरे वनमाला
अरुणकमलदलनयन विशाला
पीतवसन श्यामसुन्दर देहा
नीलजलदे जनु विजुलि रेहा

इति कुडुकः । [1]पड़िताल इति प्रसिद्धिः ।

आजु भेटल नन्दकिशोरा ।
मदनमोहनरूप जीवन हमारा ॥

इति रूपकः ॥

परम मोहनरूप परंब्रह्ममय मनुज भक्त गोपीजन
वाञ्छापूरण रचित रासवन्दनाखचित
सूड़प्रवन्ध कृष्णदासकवि विरचित
प्रचरतु [2]आचन्द्रतारक इआ ।

इत्यालापोऽतालः ॥

कमलासन शिव सहित पुरन्दर
मुखय अमरवर पूरित अम्बर
पुष्पवृष्टिकर किन्नर अपसर
दुन्दुभिशवद दिगन्तर आ ।
रासे रसिक मुरारि नारिगण
सङ्ग रङ्गरस विरचितविहरण
चउदिश उदिले अमृत किरण
अमलकमलयुगधारणआ ।

इत्येकताली ॥

---

1. पड़िताल इति प्रसिद्धिः इति पाठः 'क' पुस्तके नास्ति । 2. क—आचद्रक ।

शरदसङ्ग इत्यत्र मानम्। अस्य प्रबन्धस्य लक्षणं प्राक्कथितम्। अत्र एकरागनियम इति सालगसूड़ेऽपि एकरागनियम इति प्राञ्चः। तथान्येऽपि तालाः सन्ति यथा—

चञ्चत्पुटश्चाचपुटः षट्पितापुत्रकस्तथा।
सम्पक्वेष्टक उद्घट्टः कङ्कणः कोकिलारवः ॥१८॥
राजकोलाहलो रङ्गविद्याधरशचिप्रियौ।
वादकाकुलकन्दर्पनलकूवरदर्पणा ॥१९॥
हंसलीलो मोक्षगतिः श्रीरङ्गः सिंहनन्दनः। इत्यादिना।
एकोत्तरशतं ताले षष्ठिमुख्यतमा इमे ॥२०॥

इत्यादि वहूनां तालानां ग्रन्थविस्तरभयादप्रसिद्धत्वाच्च लक्षणादिकं न दर्शितम। सिंहनन्दनस्य प्रचुरप्रयोगदर्शनात्तु लक्षणमाह—

गौलपौलगुरुदौ च गौलपौल पगालघू।
निःशब्दं लचतुष्कं च ताले स्यात् सिंहनन्दने ॥२१॥

उदाहरणं यथा—

मल्लाररागेण

सुरभिसमयदिवसमेत[1]मीक्षितुमतिदुर्वला।
मुञ्चति मुहुरम्बुनिवहमीक्षणभवमाकुला॥
इन्दिन्दिरनिकररावकर्णनमनुकम्पिता।
कोकिलकुलकाकलीभिरहह मोहमागता॥
कठिनकृष्ण[2]कलय रे कामकदन[3]वाधिका?।
विपुलविरहविलुलिततनुरति विलपति राधिका॥
चन्दनवनमारुतेन मन्दमन्दमागतम्।
देहदाहमधिकमधिकमवति हन्त सन्ततम ॥ध्रु॥
किञ्च किरति कालकूटकलितकिरणसञ्चयम्।
विधुरयुवतिमरणहेतुरजनि रजनिपतिरयम्॥

---

1. क—दिक्षितमिति। 2. ख—केलय। 3. क—विन्दका।

श्रृणुत कर्णकुतुककारिकृष्णदासविरचनम् ।
गजपतिनृपहृदयहारिचारुसिंहनन्दनम् ॥

अत्र एकया एव आवृत्त्या उद्ग्रादित्रयम् । एवं बहुकलात्मकेषु तालेषु वोद्धव्यम् । इत्यादयः सर्वे ताला मण्ठलक्षणा एव । सर्वाण्येव गीतानि मात्रावृत्तान्येव । तथाहि—

सानुस्वारश्च दीर्घो च विसर्गी च गुरुर्भवेत् ।
वर्णः संयोगपूर्वश्च तथा पादान्तगोऽपि वा ॥२२॥

इत्युक्तप्रकारदीर्घह्रस्वाक्षरयुक्तवन्धैर्गीतानि भवन्तीति प्रतिपादितम् प्राक् । अत्रार्थे संग्रहश्लोकाः—

भवन्ति मात्रावृत्तानि गीतानि निखिलान्यपि ।
मात्रापि वन्धखण्डे स्यु स्तालगानक्रमोत्थिताः ॥२३॥
कुडुक्कादेकतालीनां खण्डः षोड़शमात्रिकः ।
यतित्रिपुटयोः खण्डः स्याच्चतुर्द शमात्रिकः ॥२४॥
खण्डस्तु रूपकादीनां भवेद्द्वादशमात्रिकः ।
त्रयाणामपि भङ्ग्यर्द्धे यतिरूपा व्यवस्थिता ॥२५॥
दशादिविंशतिप्रान्तमात्रो झम्पाड्डुतालयोः ।
खण्डे भङ्गी तु पञ्चम्यां पञ्चम्यां परिकीर्त्तिता ॥२६॥
मात्रायामपि निःसारौ स्याच्चतुर्दशमात्रकः ।
खण्डे भङ्गी तु षष्ठ्यां [1]स्यादष्टम्यां परिकीर्तिता ॥२७॥
एकद्विमात्रिकान्यूनाः सर्वे स्युः प्रान्तखण्डकाः ।
अस्याप्येवं निवृत्तिस्तु तत्तत्तालेषु दर्शिताः ॥२८॥

इति श्रीकृष्णदासवड़जेनामहापात्रकृते तालगनिर्णयो नाम द्वितीयोल्लासः ॥

---

1. क—स्यादशम्यां परिकीर्तिता ।

क्षुद्रगीतमाह—

लक्ष्मैक[1]देशयुक् क्षुद्रगीतम् । अर्थादनन्तरोक्तसालगस्य लक्ष्मैकयुतं तालधातुयुतमित्यर्थः । वाक्यञ्च सर्वत्रावश्यकम् । तेन विना क्वापि न रंजकता । एतेन ध्रुवमण्ठादिनियमोऽक्षरमात्रादिवन्धनियमोऽपि नात्राभिमतः तथाहि—

मालवश्रीरागेण एकतालेन च

नीलनलिनदलनयने ।
हारिहराङ्कतलेकृतशयने ।
घनजघनस्तनतान्ते ।
[2]हाटकलतिकानिन्दककान्ते ।
जननिजनार्दनचरणे ।
जनय रतिंजयिनी हरशरणे ॥ ध्रु ॥
कृष्णकथारसखचिते ।
कृष्णदासकृत[3]कालीगीते ।
कर्णानन्दनिदाने ।
कलयति चित्तान्यनधरपाने ॥

अस्मिन्निरोष्ठ्यगीते गानवशाच्च यतिकुडुक्करूपकैकतालीनां गानं निष्णातबुद्धिभिर्ज्ञातव्यम् । सालगे तु येकेचिदक्षरमात्राकृतवन्धमनादृत्य गीतं कुर्वन्ति तेषामज्ञानमेव ।

एतद्भेदमाह—

तत् स्याच्चतुर्विधम् । नाम्ना चित्रपदाचित्रकलाध्रुवपदापरा पाञ्चाली स्यात् । स्पष्टम् । चित्रपदा पदे वैचित्र्यसंयुता । न धात्वादौ । धात्वादौ तानविशेषे । पदवैचित्र्यश्चात्र अकठोरानुप्रासादिगुणयुक्तत्वात् । यद्यप्यत्र सर्व एवानुप्रासोऽभिमतस्तथापि अन्त्यानुप्रासस्यावश्यकता । तदुक्तम्—

---

1. ख—शेश । 2. ख—हाटककलिका । 3. क—कलि । 4. क—तस्याच्चतुर्विधम् ।

पज्झटिकायां विरुदावल्याञ्च क्षुद्रगीतादौ ।
अन्त्यानुप्रासोऽयं निवेशनीयो विशेषज्ञैः ॥१॥

एतेन शुद्धसालगादौ नास्यावश्यकता ॥ अन्त्यानुप्रासस्तु साहित्यदर्पणे —

व्यंजनं चेद्यथावस्थं पूर्वस्वरसमन्वितम् ।
आवर्तन्तेऽन्त्ययोर्ज्यत्वादन्त्यानुप्रास इष्यते ॥२॥

उदाहरणम्—

गोण्डक्रीरागेण

कलयति नयनं दिशिदिशि वलितम् ।
पङ्कजमिव मृदुमारुतचलितम् ॥
केलीविपिनं प्रविशति राधा ।
प्रतिपदसमुदितमनसिज बाधा ॥
जनयतु रुद्रगजेश[1]समुदितम् ।
रामानन्दरायकविगीतम् ॥

ध्रुवे सममात्रिकत्वान्नेदं सालगगीतम् मण्ठलक्षणाभावात् ।

**चित्रकलामाह—**

चित्रकला त्र्याद्यष्टावधिपादयुक् । न्यूनमात्रा ध्रुवे ज्ञेया । अर्थादन्ये पादाः सममात्रिकाः । इयं त्रिपदाचतुष्पदायावदष्टपदा चित्रकलाया भेदाः । उदाहरणम्—

मल्लाररागेण

[2]अनारतविषयोपभुजो मम दिनानीश गतानि वृथा ।
मनागपि न स्मरति मनो जनार्दन तव चरणकथा ।
का गतिरच्युत मे
आगतमन्तकभयमत्युग्रम् ॥ ध्रु ॥

---

1. क, ख—गजेशमुदितम् ।
2. क—अनादृत ।

दैवी तव माया दनुजान्तक देव तया मोहितहृदयम् ।
पावय दासं परमपदाधिपश्रीधरधर्मपुरिणं सदा ॥

चित्रपदाचित्रकलयोः सङ्करोदाहरणं यद्यपीदं भवितुमर्हति तथाप्यन्त्यानुप्रासरहितत्वादत्रोदाहृतम् । सङ्करगीतम् यथा—

नट्टरागेण

अनुपम वदन सुधाकर [1]हेरइते शशधर उपजल शङ्का ।
तें अभिमाने पिअल विषमविष जानल कपट कलङ्का ॥
सुन्दरि कि कहिव तेरि तनु शोभा ।
याहाँ याहाँ लागल ताहाँ ताहाँ वाधल लोचन दुहुँ वहुलोभा ॥ ध्रु ॥
काजरे साजल रुचिरनयन तोर हेराइते पूरल आशा ।
हरिन नलिन दुहुँ पाइलाज वहु पलाइ कैल वनवासा ॥
हेरि गति करिवर तेजल ग्याना कुचयुग मदन भण्डारा ।
मझा हेरि हरि कं तहुँ पलाअल वहुं नाहँ परचारा ॥
कृष्णदास भण शुन वर नागरि मने कछु न कर विचारा ।
राधा वरु नागरि कान्हु वर नागर दुअजन त्रिभुवन सारा ॥

एवमिव सङ्करगीतानां महाकविजयदेवकृते गीतगोविन्दे वहून्युदाहरणानि ।

ध्रुवपदामाह—

[2]तत्र ध्रुवपदा द्विधा ।

ध्रुवं गीत्वा भिन्नधातुपदमन्यत्तु गीयते ।

यत्रैका । [3]तद्वत् चित्रकलाचित्रपदावत् । एतेन द्वयोर्लक्षणयुक्तेयं भवति । अन्यत् [4]पदसाभोग एव । तेनेयं द्विपदा । धातुरत्र[5] तानविशेषः। इमामेव [6]चुटुकिलामाहुः । उदाहरणं [7]ज्ञातानि च पाश्चात्यगीतानि ।

---

1. ख—पेखखइते तें शशधर भेल शङ्कां । 2. ख—'तत्र' नास्ति । 3. ख—'तद्वत्' नास्ति ।
4. ख—पदसाभोगवत् 5. क—रन्ततालविशेषः 6. ख—छुटिकिला 7. ख—'ज्ञातानि च नास्ति

अपरामाह—अन्योद्ग्राहध्रुवाभोगैः स्याद् भिन्नधातुभिः । अन्या'इयं' पादत्रयवती। उदाहरणम्—

गौरीरागेण

चौआ चन्दन आजुं अङ्गे चढ़ाअ
गगने आजुं हे भवचन्द
आजु गोविन्द मिलत मारे मन्दिर शुनत पुलक पूरित सव अङ्ग
हेरत नयन अमृतरस सिञ्चित कुसुम शेज करत अति रङ्ग ॥ ध्रु ॥
विरहि युवतिजन मारण कारण काम कुटिल अवला करत दुरन्त।
कृष्णदास प्रभु ओहि करुणामय अवहि करत मेरे ए दुख अन्त ॥

पाञ्चालीमाह—

[1]पाञ्चाली वहुभिः पादैर्द्विविधा सध्रुवाध्रुवा ।

ध्रुवा वा अध्रुवा च । सर्वत्र ध्रुवो घोषा इति लोके प्रसिद्धिः । लोके पाञ्चालीति प्रसिद्धिरस्याः। उदाहरणम्— कृष्णविजयवालचरितयज्ञगीतानि ।

एषां क्षुद्रगीतानामन्योन्यसांकर्य्याद् वहवो भेदाः संभवन्ति। ग्रन्थविस्तरभयान्नोक्ताः

एषु सर्वेष्वपि आदितालनिःसारिकमण्ठान् विहाय सर्वे एवान्ये सालगसूड़तालाः।

इति श्रीकृष्णदासवड़जेनामहापात्रकृते गीतप्रकाशे क्षुद्रगीतनिर्णयो नाम तृतीयोल्लासः ॥

---

1. अत्र हरिनायकस्य संगीतसारे—

अतिविस्तीर्णपदता पञ्चः प्रोक्ता मनीषिभिः ।
स यत्रास्तीति सा प्रोक्ता पाञ्चाली भरतादिभिः ॥

## चतुर्थोल्लासः

अथ गीतगुणानाह—

गुणा गीतस्य तालेषु लययत्योर्ग्रहस्य च ।
मानस्यापि विचित्रत्वं गमकानां परिग्रहः ॥ १ ॥
मातोरर्थस्य नैर्मल्यं रागाणां रम्यतानता ।
धातोर्नवनवत्वञ्च पौनरुक्त्यपरिग्रहः ॥ २ ॥
किन्तु धातोः पौनरुक्त्यं सविधत्वे न दोषभाक् ।
तेन्नपाटस्वराणाञ्च नानाविधनिवेशनम् ॥ ३ ॥
एषु सर्वेष्वपि गुणेष्वावश्यकतमं त्विदम् ।
गुणालङ्काररसवद् वाक्यस्य ग्रहणं तु यत् ॥ ४ ॥

मातुरक्षरसञ्चयः। धातुरत्र स्वनामख्याततानविशेषः। अन्ये तु—

[1]वाङ्मातुरुच्यते गेयं धातुरित्यभिधीयते ।

उक्तवैचित्र्यं पाटस्वराणां नानाप्रकारनिवेशनम। तेनस्य तु प्रवन्धस्यादौ प्रयोगोऽप्रशक्तः। पाटस्वरयोर्गानानन्तरमेवास्य प्रयोगः पूर्वैः कृतः। वाक्यं यदङ्गतया निर्णीतं तदावश्यकम्। गुणालङ्काररससंयुक्तमेव। कोऽयं लय इत्याह—

[2]क्रियान्तरेण विश्रान्तिर्लय इत्यभिधीयते ।
स त्रिधा कथितः प्राज्ञैर्द्रुतो मध्यो विलम्बितः ॥ ५ ॥
द्रुतोऽतिशीघ्रो मध्यस्तु विश्रान्तिर्द्विगुणा ततः ।
विश्रान्तिर्द्विगुणा तस्माल्लयः प्रोक्तो विलम्बितः ॥ ६ ॥

स्पष्टम्। अत्र [3]केचिद् यत्यादौ विलम्बितलयं त्रिपुटादौ द्रुतलयं वदन्ति। अन्ये तु लयस्य गानविशेषरूपत्वात् स्रोतोवहादिविशेषलक्षणदर्शनाच्च सर्वेष्वपि तालेषु मन्यते ।

---

1. अर्द्धश्लोकोऽयं हरिनायकस्य संगीतसारे शार्ङ्गदेवस्य संगीतरत्नाकरे (३/२) च दृश्यते ।
2. 'क्रियान्तरेण' इत्यतः 'विलम्बितः' इति यावत् हरिनायकस्य संगीतसाराद् गृहीतः स्यात् ।
3. क, ख—केवचिद् ।

यतिमाह—

[1]लयः प्रवृत्तिर्नियमो यतिरित्यभिधीयते ।
समा स्रोतोवहा गोपुच्छिका चेति त्रिधा मता ॥ ७ ॥
आदिमध्यावसानेषु लयैकत्वे समा मता ।
आदिमध्यावसानेषु क्रमेण यदि गीयते ॥ ८ ॥
चिरमध्यद्रुतलया तदा स्रोतोवहा मता ।
लयैर्गोपुच्छिका प्रोक्ता द्रुतमध्यविलम्बितैः ॥ ९ ॥

ग्रहादीनाह—

अनागतसमातीता ग्रहास्तु त्रिविधा मताः ।
[2]गीतारम्भाद् यदा पूर्वं समुच्चार्याक्षरद्वयम् ॥
तालस्य न्यसनादुक्त[3] स्तदैवानागतग्रहः ॥ १० ॥

अत्र यदक्षरं अधिकं प्रगृह्यते तदनागतं तालाभ्यन्तरे कदापि न प्रविष्टम् ।
मुच्छय मानं मंजु सिमन्तिनि वत्ता ? असि मृदुल इआ इत्यत्र निःसारिकताले मुच्छय इत्यक्षराणि तालवाह्यमेवोन्यस्तम । मानं मंजु सिमन्तिनि इत्यत्र एव तालः पतति ।

[4]गीतोच्चारणमात्रेण यदा तालस्य संगतिः ।
तदा सम इति प्रोक्तः समकालसमुद्भवात् ॥ ११ ॥

यथालक्षणतालश्चेत् प्रथमं पतति तदा समग्रहः । यथा—उदाहृतादितालनिःसारिकमण्ठझंपकादौ ।

कला यास्तु पतिष्यन्ति पश्चात्ताः प्रथमे यदि ।
विन्यस्य गीयते तालस्तदादातीत ग्रहः स्मृतः ॥ १२ ॥

---

1. 'लयः' इत्यतः 'विलम्बितैः' इति यावत् हरिनायकस्य संगीतसाराद् गृहीतः स्यात् ।
2. 'गीतारम्भाद्' इत्यतः 'ग्रहः' इति यावद् हरिनायकस्य संगीतसाराद् गृहीतः स्यात् ।
3. क, ख—सर्वैः
4. श्लोकोऽयं हरिनायकस्य संगीतसाराद् गृहीतः स्यात् ।

लक्षणमतिक्रम्य गृह्यते इत्यतीतग्रहः। यथा—मुञ्च मानिनि मानतिमिरं मुखसुधाकरमित्यादौ यतिलक्षणे प्रथमं लघुद्वयं तत् हित्वा द्रुतद्वयं न्यस्तम्।

मयि कथं कुपितासि भामिनि वत विधेहि यथोचितम् इत्यत्र प्रान्ते लघुद्वयमेव। एवम्

शिशिरशीतलमंजुवंजुलमृदुलकिसलयसंकुलम् इत्यादिष्वपि ज्ञेयम्। अतएव यतिताले समग्रहकरणार्थं गन्धर्वरायेण कृतम्—

अम्भोवाह गगनभरिद रिखति
यतुर्द्दश विविधपुरी विजुलन्ति
सन्तत सहिअ गुरु गरजन्ति।

तत्पुत्रेणापि निमाइना—

भइरव एहु सखि घनकाल।

इत्यादौ भइरव इत्यनेन लघुद्वयं न्यस्तम्। संगीतरायेणापि—

इयां अमितं वलभार चलिओ युझन्त राये विचित्र पणरे
कोपे करवाल घेनि रुद्रमुरति अवतरह्ले रणभूमि।

इत्यत्र लघुद्वयमादाय समग्रहार्थमादौ इयां इति वन्धमनादृत्यापि लघुद्वयं न्यस्तम्। अतः सर्वेष्वपि तालेषु त्रिविधः ग्रहः। केचित्तु कुडुकादौ अनागतग्रहं यत्यादौ अतीतग्रहं मन्यन्ते। केचित्तु अनागतातीतयोरुदाहरण द्वयं परिवर्तयन्ति। वदन्ति च —

अतीताक्षरसंयुक्तस्तालः संन्यसते यदि।
तदातीतग्रहः प्रोक्तः ·····················॥ १३॥ ॥ इति॥

**मानमाह—**

[1]तालविश्रान्तिकारित्वान्मानं तालसमाप्तिकृत्।
तच्चेध्रुवे द्वितीयायां कलायां निपतेत्तदा॥ १४॥

---

1. 'तालविश्रान्ति' इत्यतः 'निपतेत्तदाः' इति यावद् हरिनायकस्य संगीतसाराद् गृहीतः स्यात्।

* आवर्तो वर्द्धमानाख्यस्ताले तालज्ञसम्मतः ।
मानं ध्रुवे त्वन्तिमायां कलायां निपतेद्यदा ॥
आवर्तो हीयमानाख्यस्तदा प्रक्तो मनीषिभिः ॥ १५ ॥

वर्द्धमानावर्तो यथा—

उदाहृतनिः सारिगीते तिआ इआ इआ विजयं इत्यादिवद्वितीयायां कलायां पतति मानम्।

हीयमानावर्तो यथा—

उदाहृतपाटादिप्रवन्धे थो दिक् दां इत्यत्रः मानं हीयमानमेव। टाङ्कमिति वदन्ति चेदम । प्रान्तद्वयमन्तमुच्यते इत्यन्तिमेयम्। अन्यथा हीयमानाभावः ।

**गमकमाह—**

[1]स्वरस्य कम्पो गमकः श्रोतृचित्तसुखावहः ।
तस्यप्रभेदास्तिरिपः स्फुरितः कम्पितस्तथा ॥ १६ ॥
[2]लीन आन्दोलितवलित्रिभिन्नकुरलाहताः ।
उन्नामितः प्लावितश्च हुंकृतो मुद्रितस्तथा ॥ १७ ॥
नमितो मिश्रितः पञ्चदशेति परिकीर्तिताः ।

**एतेषां लक्षणमाह—**

लघिष्ठड़मरुध्वानकम्पानुकृतिसुन्दरः ॥ १८ ॥
द्रुततुर्य्यांश[3]वेगेन तिरिपः परिकीर्तितः ।
वेगे द्रुततुरीयांशनिर्मिते स्फुरितो मतः ॥ १९ ॥
द्रुतार्द्धमानवेगेन कम्पितं गमकं विदुः ।
लीनस्तु द्रुतवेगेनान्दोलितो लघुवेगतः ॥ २० ॥
वलिर्विविधवक्रत्वयुक्तो [4]वेगवशाद् भवेत् ।
त्रिभिन्नस्तु त्रिषु स्थानेष्वविश्रान्तघनस्वरः ॥ २१ ॥
[5]कुरलो वलिरेव स्याद् ग्रन्थिलः कण्ठकोमलः ।

---

* 'आवर्तो' इत्यतः 'मनीषिभिः' इति यावद् हरिनायकस्य संगीतसाराद् गृहीतः स्यात् ।

1. 'स्वरस्य' इत्यतः 'कण्ठकोमलः' इति । यावद् हरिनायकस्य संगीतसाराद् गृहीतः स्यात् ।

2. ख—नील । 3. ख—भागेन । 4. बेगवशा भवेत् ।

5. ख—कुवलो ।

स्वरमग्रिममादायनिवृत्तस्त्वाहतो मतः ।।२२।।
उन्नामितः स तु प्रोक्तो यः स्वरानुत्तरोत्तरान् ।
क्रमाद् गच्छेत् प्लावितस्तु [1]प्लुतमानेन कम्पनम् ।।२३।।
हृदयंगमहूंकारगंभीरो हूंकृतो मतः ।
मुखमुद्रणसंभूतो मुद्रितो गमको भवेत् ।।२४।।
स्वराणां [2]नमनादुक्तो नामितो ध्वनिवेदिभिः ।
एतेषां [3]मिलनान्मिश्रस्तस्य स्युर्भुरयो भिदाः ।
आसां तु लक्षणं नोक्तं ग्रन्थबाहुल्यभीतितः ।।२५।।

एतेषामुदाहरणं गीतेष्वेव व्यक्तिर्भवेत् । गमकाभ्यासप्रकारस्तु संगीतदामोदरे—

[4]माघपौषनिशायां तु शेषप्रहरमात्रके ।
साधकः सलिले स्थित्वा गमकान् साधयेदिमान् ।।२६।।

इति कृष्णदासवड़जेनामहापात्रकृते गीतप्रकाशे गुणनिर्णयो नाम चतुर्थोल्लासः ।।

1. ख—प्लुतगानेन कम्पकम् ।   2. ख—न्यमना
3. ख—मिलनात्तु मिश्रितस्य स्युर्भूरयो भिदाः
4. अत्र संगीतदामोदरे—माघपौषनिशायान्तु शेषप्रहरमात्रके ।
साधकः सलिले स्थित्वा गमकान् सप्त साधयेत् ।। (पृः ३१)

## पञ्चमोल्लासः

अथ रागानाह—

ये रंजयन्ति चित्तं ते रागाः स्वरसमाश्रिताः ।
संपूर्णाः षाड़वा[1]स्तद्वदौडुवाश्चेति ते त्रिधा ॥
ते क्रमेण प्रवर्तन्ति सप्तषट्पञ्चभिः स्वरैः ॥१॥

संपूर्णाः सप्तस्वररागाः । [2]षाड़वाः षट्स्वररागाः । [3]औडुवाः पञ्चस्वररागाः ।

संपूर्णानाह—

श्रीराग[4]नट्टकर्णाटरेवगुप्तवसन्तकाः ।
शुद्धभैरववङ्गालसोम[5]रागाश्चपञ्चमाः ॥२॥
कामोदमेघरागौ च तथा द्राविड़गौड़कः ।
वराड़ि गुज्जरी तोड़ी मालवश्रीश्च सैन्धवी ॥३॥
[6]देवक्री चैव रामक्री तथा प्रथममंजरी ।
नट्टा वेलावली [7]गौड़ीत्याद्याः संपूर्णकाः मताः ॥४॥

षाड़वानाह—

*गौड़कर्णाट[8]वङ्गालदेशीधन्नासिका स्तथा ।
कोलाहला च वल्लाली देशाख्याशावरीति च ॥५॥
खम्भावती हर्षपुरी मल्लारी[9]हुंछिकेत्यपि ।
इत्याद्याः षाड़वाः प्रोक्ताः [10]रागाः श्रुतिमनोहराः ॥६॥

---

1. क, ख—स्तद्वदौवड़ाश्चेति । 2. ख—वाक्यमिदं नास्ति । 3. क, ख—ओडवाः ।
4. ख—नट । 5. ख—रागस्तु पञ्चमी । 6. ख—देवक्री । 7. क—गौरी ।

* ख—"आदिपदेन—

नाटघण्टारवौ नट्टनारायणक भूपतिः ।
शङ्कराभरणश्चेति पूर्णरागा इमे मताः ॥"

आत्रान्तर्गतानां रागाणां लक्षणाभावात् पाठोऽयं प्रक्षिप्तः । इति सम्पादकः

8. ख—'वङ्गालः' नास्ति । 9. ख—हुङ्कृतेत्यपि । 10. ख—राश्चेति मनोहराः ।

औडुवानाह—

*मध्यमादिश्च मल्लारो देशपालश्च मालवः ।
हिंदोलो भैरवो नागध्वनिर्गोण्ड[1]कृतिस्तथा ॥७॥
[2]ललिता च ततश्छायातोडी वेलावली तथा ।
प्रतापपूर्विका प्रोक्ता सैन्धवी द्वितीया तथा ॥
† इत्याद्या औडुवाः प्रोक्ताः रागा जनमनोहराः ॥८॥

एतेषां लक्षणान् क्रमादाह—

षड्जन्यासग्रहांशोऽयं श्रीरागः स्वल्पपञ्चमः ।
षाड्जीजातिसमुत्पन्नः षड्जग्रामसमाश्रितः ॥९॥
सायं गेयो रसे वीरे शृंगारे चेति निश्चितः । इति श्रीरागः ॥
श्रीरागवत्तथा नट्टः किंतु नैषोऽल्पपञ्चमः ॥१०॥
ध-रि-तारो नि-संद्रश्च गमकैरुत्कटैर्युतः । इति [3]नट्टः ॥
कर्णाटस्तद्वदाख्यातो नि-न्यासग्रहणांशकः ॥११॥ इति कर्णाटः ॥
रेवगुप्तस्तथा षड्जे [4]मध्यमार्षभिकोद्भवः ।
रि-ग्रहांशो मध्यमान्तो रसे वीरे नियुज्यते ॥१२॥ इति रेवगुप्तः ॥
[5]षड्जमध्यमिकाजातः षड्जन्यासग्रहांशकः ।
गेयो वसन्तरागोऽयं वसन्तसमये बुधैः ॥१३॥

---

* ख—"आदिपदेन—
श्रीकण्ठिका च भौलि च तारासालगगौडकः ।
शुद्धाभीरी मधुकरी छाया नीलोत्पलान्ध च ।।"

अत्रान्तर्गतानां लक्षणाभावात् पाठोऽयं प्रक्षिप्तः स्यादिति सम्पादकः ।

1. क—'कृति' इति शब्दोपरि 'करी' इति लिखितो दृश्यते ।
2. ख—श्लोकार्द्धोऽयं नास्ति । ग—"ललिताशतज ।

† ख—"आदिपदेन—
तुरुष्कगौडो गान्धारः पुलिन्दीमेघरञ्जिका ॥ इति ॥"

अत्रान्तर्गतानां लक्षणाभावात् अयमपि पाठः प्रक्षिप्तः स्यादिति सम्पादकः ।

3 ख—नट । 4. क, ख—मध्यमार्षभकोद्भवः । 5. श्रीरागादारभ्य वसन्तरागलक्षणं यावत् पाठः हरिनायकस्य संगीतसारेऽपि वर्तते ।

अन्यस्तु—

[1]श्रीपञ्चम्याः समारभ्य यावत् स्यात् शयनं हरेः ।
तावद् वसन्तरागस्य गानमुक्तं मनीषिभिः ॥१४॥ इति वसन्तः ॥

ग्रन्थान्तरे तु—

[2]वसन्तो रामकेरी च गुज्जरी सरसापि च ।
सर्वस्मिन् गीयते काले नैव दोषोऽभिजायते ॥१५॥

[3]धैवतांशग्रहन्यासयुक्तः स्याच्छुद्धभैरवः ।
सकंपमन्द्रगांधारो गेयो मध्याह्नतः परम् ॥१६॥ इति शुद्धभैरवः ॥

बङ्गालः कैशिकीजातः षड्जन्यासग्रहांशकः ।
सकंपमंद्रगांधारः करुणे प्रहरात् परम् ॥१७॥ इति बङ्गालः ॥

षाड्जीजातिसमुत्पन्नः षड्जन्यासग्रहांशकः ।
नि-तारः [4]प-नि-बाहुल्यो रसे वीरे नियुज्यते ॥१८॥

मेघच्छायागमे गेयः सोमरागो मतः सताम् ॥ इति सोमरागः ॥
आन्ध्रीजातिसमुत्पन्नो मध्यमग्रामगोचरः ॥१९॥

गांधारांशग्रहन्यासो रागस्यादाम्रपञ्चमः ॥ इत्याम्रपञ्चमः ॥
नि-तारः कंपबहुलः करुणोद्भुतहासगः ॥२०॥

षड्जे षाड्जीभवः षड्जग्रहांशो न्यासधैवतः ।
समस्वरश्च कामोदो मंद्रगांधारभूषितः ॥२१॥ इति कामोदः ॥

---

1. संगीतदामोदरे (पृ-४१) अपि श्लोकोऽयं दृश्यते ।
2. श्लोकोऽयं मम्मटाचार्यस्य रत्नमाला (संगीतरत्नमाला) ग्रन्थादुदाहृत इति संगीतनारायणाद् ज्ञायते ।
3. शुद्धभैरवरागलक्षणादारभ्य वराडीरागलक्षणं यावत् पाठः हरिनायकस्य संगीतसारेऽपि प्रायशो दृश्यते । शुद्धभैरवस्य लक्षणमिदं संगीतनारायणस्य प्रथमसंस्करणे (पृ- १८) भैरवरागलक्षणरूपेण वर्तते । एतदनाकरमेव ।
4. ख—पनीबाहुल्यो ।

धैवतांशग्रहन्यासः [1]षड्जे धैवतिकोद्भवः ।
गेयो घनागमे मेघरागोऽयं मंद्रहीनकः ॥२२॥ इति मेघरागः ॥
निषादांशग्रहन्यासः षड्जपञ्चमसंकुलः ।
गेयो द्राविड़गौड़ोऽयं वीरशृंगारयोर्निशि ॥२३॥ इति द्राविड़गौड़ः ॥
प्रहरार्द्धतो गेया भिन्नपञ्चमसंभवा ।
षड्जन्यासग्रहांशैषा वराड़ी सुमनोहरा ॥२४॥ इति वराड़ी ॥
गुज्जरी रि-ग्रहांशान्ता जाता पञ्चमषाड़वात् ।
[2]क्वचिन्मान्तापि [3]घस्रादौ गेया शृङ्गारवर्द्धनी ॥ २५ ॥ इति गुज्जरी ॥
मध्यमांशग्रहन्यासा तोड़िका शुद्धषाड़वात् ।
जाता मध्याह्नसमये [4]गेया शृङ्गारवीरयोः ॥ २६ ॥ इति तोड़ी ॥
मालवश्रीः शरद्गेया जाता मालवकैशिकात् ।
षड्जन्यासग्रहांशैषा पार्वतीप्रीतिकारिणी ॥ २७ ॥
हरेः शयनमारभ्य यावद्दुर्गामहोत्सवम् ।
पार्वतीप्रीतये तावन्मालवश्रीर्मनोहरा ॥ २८ ॥ इति मालवश्रीः ॥
सैन्धवी पञ्चमाज्जाता ग्रहांशन्यासपञ्चमा ।
मध्याह्नादूर्द्ध्वतो गेया शृङ्गारे करुणेऽपि च ॥ २९ ॥ इति सैन्धवी ॥
षड्जन्यासग्रहां[5]शेयं वीरे देवक्रतिर्मता ।
असावृतुषु सर्वेषु गातव्या समयेऽपि च ॥ ३० ॥ इति देवक्री ॥
अस्या इदानीं शुद्धवसन्त इति प्रसिद्धिः ॥
प्रहराभ्यन्तरे गेया षड्जन्यासग्रहांशका ।
षड्जर्षभघनारम्भा तज्ज्ञैः रामक्रतिर्मता ॥ ३१ ॥ इति रामक्री ॥

---

1. क—षड्जधैवतिकोद्भवः । ख—षड्जमध्यमिकोद्भवः ।
संगीतरत्नाकरपाठः —
षड्जे धैवतिकोद्भूतः षड्जतारसमस्वरः ॥१६४॥
मेघरागो मन्द्रहीनो ग्रहांशन्यासधैवतः ।
'षड्जग्रामे' इत्यर्थद्योतनाय 'षड्जे' इति पदव्यवहारः संगीतरत्नाकरग्रन्थे दृश्यते । तद्दृष्ट्यात्र 'षड्जे धैवतिक द्भवः' पाठोऽस्माभिर्गृहीतः । इति सम्पादकस्य ।
2. क, ख—क्वचिन् गान्ता । 3. ख—रासादौ । 4. क, ख—शार्यं । 4. ख—ज्ञेया ।

पञ्चमांशग्रहन्यासा ध-रि-तारा ग-मोत्कटा ।
श्रृङ्गारे चोत्सवे गेया प्रातः प्रथममञ्जरी ॥ ३२ ॥ इति प्रथममञ्जरी ॥
नट्टा नटवदाख्याता सकंपान्दोलितस्वरा ।
हास्येऽद्भुते च श्रृङ्गारे गातव्या निशि मङ्गले ॥ ३३ ॥ इति नट्टा ॥
धैवतांशग्रहन्यासा समद्रा च समस्वरा ।
श्रृङ्गारे करुणे चैव गेया बेलावली बुधैः ॥ ३४ ॥ इति बेलावली ॥
गौड़ी षांशग्रहन्यासा जाता मालवकैशिकात् ।
वीरश्रृङ्गारयोर्गेया सकंपान्दोलितस्वरा ॥ ३५ ॥ इति गौड़ी ॥

इति संपूर्णाः ॥

अथ षाड़वाः—

निषादांशग्रहन्यासो गौड़ः स्यात् पञ्चमोज्झितः ।
वीरश्रृङ्गारयोर्गेयो दिनान्ते विरलर्षभः ॥ ३६ ॥ इति गौड़ः ॥
गान्धारांशग्रहन्यासः षड्जपञ्चमवर्जितः ।
एष कर्णाटवङ्गालः श्रृङ्गारे [1]टकवंशजः ॥ ३७ ॥ इति कर्णाटवङ्गालः ॥
नाटकर्णाटयोर्योगे टकरागो नपुंसकः ॥

(इति रत्नमाला)

कस्यमते—

निषादांशग्रहन्यासः षड्जपञ्चमवर्जितः ॥ ३८ ॥
एष कर्णाटगौड़स्तु कर्णाटवदुदाहृतः । (कर्णाट गौड़ः)
रेवगुप्तोद्भवा देशी [2]प-त्यक्ता म-नि-विस्तरा ॥ ३९ ॥
ऋषभांशग्रहा प्रातर्गेया करुणशान्तयोः । इति देशी ॥
ष-ग्रहांशा मध्यमान्ता शुद्धकैशिकमध्यमात् ॥ ४० ॥
जाता रि-हीना धन्नासी वीरश्रृङ्गारयोः सदा ।
सदेति रात्रौ दिवसे इच्छया गेया ॥ इति धन्नासी ॥
षड्जन्यासग्रहा कोलाहला टक्कुलोद्भवा ॥ ४१ ॥

---

1. क—टङ्क । ख—टक । 2. क—पत्यूका ।

मध्यमांशा ग-हीना च कलहे गमकोत्कटा ॥ इति कोलाहला ॥
हिंदोलान्वयसंपन्ना वल्लाली ष-ग्रहांशका ॥ ४२ ॥
शृंगाराख्ये ध-मंद्रा च रि-हीना न्यासषड्जका ॥ इति [1]वल्लाली ॥
गांधारपञ्चमाज्जाता देशाख्यार्षभवर्जिता ॥४३॥
गांधारांशग्रहन्यासा शान्तशृंगारयोः प्रगे ॥ इति देशाख्या ॥
शावरी धैवतान्ता च [2]ग-तारा मन्द्रमध्यमा ॥४४॥
म-ग्रहांशाल्पषड्जा च [3]प-हीना करुणे मता ॥ इति शावरी ॥
धैवतांशग्रहन्यासा सान्दोल-म-नि-मण्डिता ॥४५॥
खम्भावती प-हीना च शृंगारे निशि गीयते ॥ इति खम्भावती ॥
जाता हर्षपुरी षड्जमन्द्रा मालवकैशिकात् ॥४६॥
षड्जाद्यन्ता तारमध्या ध-हीना प्रमदे मता ॥ इति हर्षपुरी ॥
पञ्चमांशग्रहन्यासा ग-हीना मन्द्रमध्यमा ॥४७॥
शृंगारे दुर्दिने गेया मल्लारी परिकीर्तिता ॥ इति मल्लारी ॥
धैवतांशग्रहन्यासा प-हीना हूंछिका मता ॥४८॥
आन्दोलित-स-मा यामद्वयादूर्द्ध्व च गीयते ॥ इति हूंछिका ॥

इति षाड़वाः

अथौड़ुवाः—

मध्यमादिर्मग्रहान्तो मध्यमग्राम[4]गोचरः ॥४९॥
अयं सायं तु गातव्यः शृंगारे रि-ध-वर्जितः ॥ इति मध्यमादिः ॥
मल्लारः स-प-हीनोऽयं संजातः पञ्चमान्वये ॥५०॥
धैवतांशग्रह[5]न्यासो ग-मन्द्रस्तारसप्तमः ॥
स्ववाञ्छितरसे गेयस्तोयस्यागमने बुधैः ॥५१॥ इति मल्लारः ॥
टक्कान्वयसमुद्भूतो देशपालो रि-पोज्झितः ।

---

1. ख—वलावली । 2. ख—पतारा । 3. ख—रिहीना ।
गुर्जरीरागलक्षणादारभ्य गौरीरागलक्षणं यावत् पाठः हरिनायकस्य संगीतसारेऽपि दृश्यते ।
4. ख—राजिपूः । 5. ख—न्यासौ ।

सान्दोलषड्जकलितो नि-न्यासग्रहणांशकः ॥५२॥
रसे वीरे च शृंगारे गेयः सायमयं बुधैः ॥ इति देशपालः ॥
इदानीं केदार इति प्रसिद्धोऽयम् ॥
टकान्वयसमुद्भूतो मालवोऽपि रि-पोज्झितः ॥५३॥
निषादांशग्रहन्यासो ग-भूरिः ष-ध-कम्पितः ॥
वीरशृंगारयोर्गेयो दिनान्ते निशि वा बुधैः ॥५४॥ इति मालवः ॥
षड्जन्यासग्रहांशोऽयं हिन्दोलो रि-प-वर्जितः ।
अधैवत्यार्षभीजातो वीरशृंगारयोः सदा ॥५५॥
सदा सर्वेष्वपि कालेषु गेय इत्यर्थः ॥

अन्यस्तु—
हिन्दोलश्च वसन्तश्च वसन्ते [1]रक्तिदायकः ॥ इति हिंन्दोलः ॥
भिन्नषड्जसमुत्पन्नो भैरवोऽपि रि-पोज्झितः ॥५६॥
ध-ग्रहांशो मध्यमान्तो गेयो मङ्गलकर्मणि ॥ इति भैरवः ॥
टक्कान्वयभवो नागध्वनिः [2]रि-ध-विवर्जितः ॥५७॥
षड्जन्यासग्रहांशोऽयं गेयो वीररसे सदा ॥ इति नागध्वनिः ॥
षड्जन्यासगृहांशैषा [3]गोण्डक्री [4]स-प-विस्तृता ॥५८॥
रि-ध-हीना दिनादौ च गातव्येष्टरसे बुधैः ॥ इति गोण्डक्रीः ॥
टक्करागसमुद्भूता ललिता ललितस्वरा ॥५९॥
षड्जन्यासगृहांशा च ष-संद्रा रि-प-वर्जिता ॥ इति ललिता ॥
छायातोड़ी रि-प-त्यक्ता संभूता षाड़वान्वये ॥६०॥
मृदुकरुपस्वरा मांशागृहन्यासा दिवातनी ॥ इति छायातोडी ॥
ककुभस्य कुले जाता प्रतापोपपदा दिवा ॥६१॥
धांशन्यासगृहा वेलावली च रि-प-वर्जिता ॥ इति प्रतापवेलावली ॥

---

1. ख—रति ।

हर्षपुरीरागलक्षणादारभ्य हिन्दोलरागलक्षणं यावत् पाठः हरिनायकस्य संगीतसारेऽपि दृश्यते ।

2. क—ऋषभवर्जित 3. ख—गौण्डक्री 4. क, ख—परिष्कृता

* षड्जन्यासग्रहांशान्या सैन्धवी [1]नि-ग-वर्जिता ॥६२॥
मृदुकम्पस्वरा गेया जाता मालवकैशिकात् ॥ इति सैन्धवी ॥
द्वितीयासैन्धवी [2]भिन्नषड्जजान्दोलितस्वरा ॥६३॥
धैवतांशगृहन्यासा श्रृंगारे रि-प-वर्जिता ॥ इति द्वितीया सैन्धवी ॥
इतौडुवाः
एषामन्योन्यसंसर्गाद्रागाणां वहुशो भिदाः ॥६४॥
तत्र केचित्तु संकीर्णा कथ्यन्ते श्रुतिशोभना ॥
देशाख्यायाश्च मल्लार्याः स्यादंशाभ्यां च पौरवी ॥६५॥
[3]नाटमल्लारयोरंशान्नटमल्लारिका भवेत् ॥
गुज्जरीदेशिकासंगाद्रामकेरीरजायत ॥६६॥
तोड़ीधन्नासिकायोगान्नमारवी समजायत ॥
देशाख्याशावरीसंगाद् [4]वल्लवी परिकीर्तिता ॥६७॥
श्रीरागगौड़योरंशाज्जाता गौरी शिवप्रिया ॥
कल्याणी नाटकर्णाटवाराटीयोगसम्भवा ॥६८॥
कर्णाटभैरवांशाभ्यां जाता कर्णाटिका तथा ॥
मल्लारीसैन्धवीतोडीयोगादाशावरी भवेत् ॥६९॥
[5]सैन्धवीतोडिका[6]योगात् समुत्पन्ना मुखावरी ॥
अन्येऽपि सन्ति भूयांशो रागाः संकीर्णलक्षणाः ॥७०॥
ये ये यथाश्रुता देशे ज्ञेयास्ते ते तथा वुधैः ॥

**रागाणां समयलंघनदोषमाह---**

उल्लंघ्य समयं रागान् यस्तु गायति गायनः ॥७१॥
तस्य कुर्वन्ति गंधर्वाः सर्वनाशं न संशयः ॥

---

* सैन्धवीरागलक्षणादारभ्य 'न संशयः' इति पदं यावत् पाठः हरिनायकस्य संगीतसारेऽपि दृश्यते।

1. क—निपवर्जिता। सं: र: २—"मालवे कैशिकेऽप्यस्ति सैन्धवी मृदुपञ्चमा ॥१८०॥
समन्द्रा नि-ग-निर्मुक्ता षड्जन्यासगृहांशिका ॥
2. ख—भिन्नषड्जान्दोलितस्वरा। 3. क—नट। 4. क—बल्लहः।
5. क—सैन्धव। 6. क, ख—भेदात्।

अदोषमाह—

*रागे यत् प्रोक्तमस्माभिः समयादि रसादि वा ॥७२॥
तत् सर्बमन्यथापि स्याद्राज्ञामाज्ञावशादिह ॥
तथा श्रेणिवन्धवशाद्रागाणां रागवेदिभिः ॥७३॥
[1]समयातिक्रान्तिदोषो न प्रवन्धेषु गृह्यते ॥
अनौरप्युक्तम्—
नृपाज्ञायां रङ्गभूमौ [2]कालदोषो न विद्यते ॥७४॥
[3]ग्रन्थान्तरे—
लोभान्मोहाच्च ये केचिद् गायन्ति च विरागतः ।
सरसागुज्जरी तेषां दोषं हन्ति न संशयः ॥७५॥
धन्नासी पापहारीति केचिदेवं वदन्ति च ।
चिरन्तनकसंगीते कविभिर्नाभिमन्यते ॥७६॥ इति पञ्चमसारे ॥
दशदण्डात् परं रात्रं सर्बेषां गानमीरितम् । इति नारदसंहितायाम् ॥
रागं चेदालपेत् पूर्बं तत्पत्नीं तदनन्तरम् ॥
अन्यपत्नी न कर्तव्या राजाज्ञायां न दूषणम् ॥७७॥

इति श्रीकृष्णदासवड़जेनामहापात्रकृते गीतप्रकाशे रागनिर्णयो नाम पञ्चमोल्लासः ॥



* 'रागे यत्' इति पदमारभ्य 'न प्रवन्धषु गृह्यते' इति यावत् पाठः हरिनायकस्य संगीतसारेऽपि दृश्यते ।
1. क—समयातिरिक्ता । ख—समयातिक्रान्तदोषो । 2. ख—रागदोषो ।
3. क—'ग्रन्थान्तरे' इत्यारभ्य 'न दूषणम्' इति यावन्नास्ति ।

केयं जातिरित्याह—

रागस्तु जायते यस्याः सा जातिरभिधीयते ।

स्पष्टम् ॥

तद्भेदानाह—

शुद्धा च विकृता चेति सा द्विधा परिकीर्तिता ॥१॥
शुद्धाः सप्तविधाः प्रोक्ता स्तज्ज्ञैः [1]षाड्ज्यादिभेदतः ॥
षड्जकैशिक्यादिभेदादेकादश[2]भिदाऽपरा ॥२॥
ग्रहांशादिदृढज्ञानं कुर्वन्त्येतास्तु जातयः ॥
षाड्ज्यार्षभी च गांधारी मध्यमा पञ्चमी तथा ॥३॥
धैवती चाथ नैषादी [3]शुद्धाः स्युर्विकृताः पुनः ।
स्यात् षड्जकैशिकीषड्जोदीच्यवाषड्जमध्यमा ॥४॥
गांधारोदीच्यवारक्त[4]गांधारीकैशिकी तथा ।
मध्यमोदीच्यवा कार्मारवी गांधारपञ्चमी ॥५॥
तथा चान्ध्रीनंदयन्तीत्येकादश भिदा मताः ।
मिलित्वाष्टादश ज्ञेयास्ता रागाणाञ्च मातरः ॥६॥

ग्रहांशन्यासानाह—

ग्रहः स्वरः स इत्युक्तो यो [5]रागादौ समर्पितः ।
यो रक्तिव्यंजको गेये यस्य सर्वेऽनुगामिनः ॥७॥
यः स्वयं ग्रहतां यातो न्यासादीनां प्रयोगतः ।
यस्य सर्वत्र वाहुल्यं स वाद्यंशो नृपोपमः ॥८॥

वादी रागादिनिश्चयकर्ता ॥

न्यासः स्वरस्तु स प्रोक्तो यो गीतादिसमाप्तिकृत् ।

---

1. क—कौशिक्यादिभवतः । 2. ख—भिधा वा परा । 3. ख—तिथास्युः
4. ख—गांधारो 5. क—गीतादौ

'रागस्तु जायते' इत्यारभ्य 'समाप्तिकृत्' इति यावत् पाठः हरिनायकस्य संगीतसारेऽपि दृश्यते ।

स्वरानाह—

रंजयन्ति श्रोतृचित्तं स्वयं यस्मात्ततः स्वराः ॥९॥
श्रुत्यन्विताख्रिधा मंद्रमध्यतारसमाश्रिताः ।
जाताः श्रुतिभ्यः षड्जाद्याः स-रि-गाद्यपराभिधाः ॥१०॥

आदिना—षड्जर्षभौ च गांधारो मध्यमः पञ्चमस्तथा ।

धैवतश्च निषादश्च श्रुतिसंवलिताः स्वराः ॥११॥
[1]मयूरश्चातकश्छागः कौञ्चकोकिलदर्दुराः ।
मातंगश्च क्रमेणाहुः स्वरानेतान् सुदुर्गमान् ॥१२॥
[2]ते वादिसंवादिविवाद्यनुवाद्यभिधाः पुनः ।
स्वराश्चतुर्विधाः प्रोक्तास्तत्र वादी स गद्यते ॥१३॥
प्रचुरो यः प्रयोगेषु वक्ति रागादिनिश्चयम् ।
[3]समश्रुतिस्वु संवादी पञ्चमस्य न मः क्वचित् ॥१४॥
ग-नी-विवादिनौ स्यातां रि-ध-योर्वाऽथ[4] तौ तयोः ।
अनुवादी भवेत् शेष इति दत्तिलसंमतः ॥१५॥
वादी नृपस्तथामात्यः संवाद्यथ विवाद्यरिः ।
अनुवादी ह्यनुचरो राज्ञः पात्रस्य चेरितः ॥१६॥

अथ ग्राममाह—

स्वराणां सुव्यवस्थानां समूहो ग्राम ईष्यते ।
षड्जश्च मध्यमश्चैव गांधारश्चेति स त्रिधा ॥१७॥
पञ्चमश्चेन्निर्विकारी षड्जग्रामस्तदोच्यते ।
यद्युपान्तश्रुतिस्थोऽयं ग्रामः स्यान्मध्यमस्तदा ॥१८॥

---

1. सं: दा: पृ-३० — मयूरवृषभश्छागीक्रोष्टकोकिलवाजिनः ।
मातङ्गश्च क्रमेणाहुः स्वरानेतान् सुदुर्गमान् ॥

2. क—ते वादि संवादिविवादिनश्च तथानुवादी गदिताः कवीन्द्रैः
'तेवादि संवादि' इत्यारभ्य स्यान्मध्यमस्तदा इति यावत् पाठः हरिनायकस्य संगीतसारेऽपि दृश्यते । 3. ख—समः श्रुतिस्तु । 4. क—तु ।

गांधारो देवगेयत्वान्नास्माभिरिह लक्षितः ।

अत्र मूर्च्छनातानादयश्चाकरेभ्यो ज्ञांतव्याः ॥

**अथ श्रुतिराह—**

* नाभिग्रन्थे समुत्तिष्ठे दूर्द्ध्वमूर्द्ध्व क्रमादयम् ॥१६॥
अतिसूक्ष्मो भवेन्नाभौ सूक्ष्मो हृदयपङ्कजे ।
पुष्टः कण्ठे मुर्द्धन्यपुष्टो वदने कृत्रिमो मतः ॥२०॥
एवं नादः पञ्चविधः पञ्चस्थान समाश्रितः ।
पवनानलनामानौ नादौ तु परिकीर्तितौ ॥२१॥
जातस्तयोर्यतो योगात्तेन नाद इति स्मृतः ।
स नादः श्रुतयोर्द्वाविंशतिः स्यान्मारुताहतः ॥२२॥
द्वाविंशतिस्तिर्यगूर्द्ध्वनाड्यो हृदयमाश्रिताः ।
ता यावत्यस्तु तावत्यः श्रुतयः परिकीर्तिताः ॥२३॥
क्रमादुच्चोच्चतायुक्ता वीणादावेव लक्षिताः ।
कफादिदूषिते कण्ठे [1]तासां व्यक्तिर्न जायते ॥२४॥
षड्जश्चतुः श्रुतिस्तत्र ऋषभस्त्रिश्रुतिस्ततः[2] ।
गांधारो द्विश्रुतिस्तत्र मध्यमस्तु चतुःश्रुतिः ॥२५॥
चतुःश्रुतिः पञ्चमोऽपि धैवतस्त्रिश्रुतिस्ततः ।
निषादो द्विश्रुतिरिति श्रुति[3]संवलिताः स्वराः ॥
स्वस्यान्त्यश्रुतिमाक्रम्य निवसन्तीह ते पुनः ॥२६॥

इति श्रीकृष्णदासबड़जेना महापात्रकृते गीतप्रकाशे स्वरनिर्णयो नाम षष्ठोल्लासः ॥



---

* 'नाभिग्रन्थे' इति स्थाने 'ब्रह्मग्रन्थे' इति पाठभेदेन सह 'ते पुनः' इति यावत् पाठः हरिनायकस्य संगीतसारे दृश्यते । 1. ख—रागव्यक्ति । 2. ख—मतः । 3. क—सम्मिलिताः ।

## सप्तमोल्लास

अथ गीत[1]दोषानाह—

दिव्यमानुषमिश्राणां गीतानां स्खलनं गिराम् ।
वितालादिनिवद्धश्च नित्यदोष इह त्रिधा ॥१॥

इहगीते दिव्यादिभेदानां गीतानां त्रैविध्ये गिरां स्खलनं अशुद्धपद निवन्धनम् । तदुक्तम्—

दिव्यं च मानुषंचैव गीतं स्याद्दिव्यमानुषम् ।
दिव्यं संस्कृतसंपन्नं मानुषं प्राकृतोत्थितम् ॥२॥
संस्कृतप्राकुतोत्थं च दिव्यमानुषमुच्यते ।
कचिद्देशविशेषोत्थभाषायां मानुषं भवेत् ॥३॥

इत्युक्तप्रकारेण संसकृते च देशविशेषोत्थभाषायामपि गीतं भवेत् । तथैवोदाहृतम् । तत्र संसकृतप्राकृतयोः पाणिन्यादिप्रणीतलक्षणा[2]सिद्धपदविन्यासे दोषः । तथा—

[3]गौड़ोड्रद्रविड़ाङ्गश्च [4]लाटकर्णाट [5]भोटकाः ।
नेपाल[6]कामरूपाद्या देशभाषादिहेतवः ॥४॥

इत्यादयो देशाः संगीतरत्नाकरादिभ्यो ज्ञातव्याः । एतेषामन्य[7]तमदेशभाषामाश्रित्य गीतकरणे तत्तद्भाषास्खलनेऽपि दोषः । किं चात्र पौनरुक्त्यादिकं दोषाय । यदुक्तम्—

पौनरुक्त्यं न भाषाढ्ये गीते दोषोऽभिजायते ।
शीघ्रोच्चारे च वर्णानां तथा चैव प्रसारणे ॥५॥
लिङ्गान्यत्वे विसन्धौ च संयुक्ताक्षरमोक्षणे ।

---

1. क—दोषमाह । 2. ख—नुक्त । 3. श्लोकोऽयं हरिनायकस्य संगीतसारेऽपि वर्तते ।
4. क, ख—नाट । 5. तोटकाः । 6. ख—कमरूप । 7. क—क्रम ।

असंयोगेऽपि [1]संयोगं ह्रस्वदीर्घव्यतिक्रमे ॥
[2]परिवर्तेऽक्षणां च भाषागीते न दोषभाक् ॥७॥

इत्यनेन भाषागीते न दोषः। संस्कृतप्राकृतयोस्तु दोष एव। संस्कृतादीह भंगप्रसंगात्। किं च शुद्धसालगगीतेषु प्राचीनैः संस्कृतानुयायिनी भाषामिश्रितान्यादृशी भाषा निवध्यते। अतस्तु तथैव निवद्धव्याः। तथा अशक्त्या तालत्यागेऽप्येवम्। आदिना ग्रहादिनामन्यथाकरणेऽपि दोषः।

दोषान्तरमाह—

सन्त्यन्ये वह्वो दोषा ग्रन्थविस्तरभीरुणा।
ग्रन्थान्तरेभ्यस्ते ज्ञेया अनुक्ताश्च गुणा अपि ॥८॥

ते दोषाः दुष्टं पदं श्रुतिकटुश्च्युतसंस्कृताप्रयुक्तमसमर्थमित्यादिना पदवाक्यार्थरसदोषा ये निर्णीतास्तेऽपि गीते त्याज्या एव। किं च माधुर्य्यादयो गुणा उपमादयोऽलंकाराः [3]शृंगारादिरसा भावशान्त्यादयोऽपि अत्रगीते निवद्धव्याः। ते तु ग्रन्थविस्तरभयान्नोक्ताः। काव्यप्रकाशादौ च ज्ञेयाः।

इदानीमुपसंहरन्नाह—

कृता गीतपरीक्षेऽयं कृष्णदासेन कौतुकात्।
आर्यं मात्सर्यमुत्सार्य्य ससन्तोषं विचार्य्यताम् ॥९॥

[4]इति श्रीकृष्णदासवड़जेनामहापात्रकृते गीतप्रकाशे दोषनिर्णयो नाम सप्तमोल्लासः।
[5]समाप्तश्चायं ग्रन्थः।



---

1. ख—संयोगे। 2. श—अर्धश्लोकोऽयं नास्ति।
3. ख—शृंगारादि रसाभावशान्त्यादयोऽपि। 4. क—वाक्यमिदं नोपलभ्यते।
5. श्रीवीरकेशरीदेवस्य तु पञ्चाङ्के ऋषभ दि ३ ने गुरुवासरे तुङ्गगोविन्ददक्षिणरायमहापात्रकविना लिखितं पुस्तकं शुभे।

## CORRIGENDUM

| Page | Line | Incorrect | Correct |
|---|---|---|---|
| 9 | last line | क-इ़ि | क - इति |
| 10 | 5th (last word) | पूव: | पूर्व: |
| " | 9th " | द्रतस्यार्द्धम् | द्रुतस्यार्द्धम् |
| " | 18th | सशद्दं | सशब्दं |
| " | " | शद्दहीनं | शब्दहीनं |
| " | 19th | सशद्दकम् | सशब्दकम् |
| " | last line | संङ्गीतसार ग्रन्थेऽपि | सङ्गीतसारग्रन्थेऽपि |
| 11 | 16th (last word) | मण्टल- | मण्ठल- |
| " | 24 (1st word) | किंचदुच्चैश्च | किञ्चिदुच्चैश्च |
| 12 | 6th | सार्द्धेकगुणा | सार्द्धैकगुणा |
| " | " | मन्ठक: | मण्ठक: |
| " | 23rd | सार्द्धेकगुणा | सार्द्धैकगुणा |



# BIBLIOGRAPHY


1. A Comparative study of some of the leading Music systems of the 15th, 16th, 17th and 18th centuries—Pandit V. N. Bhatkhande (1940)
2. A Short Historical Survey of the Music of Upper India— ,, 1934 Reprint
3. Aini Akbari-Abul Fazl—translated by H. Blochmann second 1965 edition.
4. Akbarnama— ,, —translated by H. Beveridge.
5. Bharateeya Sangeeta—Udgraha Khanda—Neelamadhab Panigrahi (Editor), 1965
6. B. N. S.—The Natyasastra of Bharata—The Kashi Sanskrit Series No. 60
7. -do- (Baroda)—Natyasastra of Bharatamuni with the Commentary Abhinavabharati by Abhinavaguptacarya (Oriental Institute, Baroda).
8. B. N. S.—(M.M.)—The Natyasastra ascribed to Bharata-muni, Ed. Manomohan Ghosh, (1951 and 1956).
9. Brihaddesi of Matangamuni—Trivandrum, 1928 edition.
10. Dattilam of Dattila—Trivandrum, 1930 edition.
11. -do. —Sangit Karyalay, Hathras, 1960 edition.
12. Descriptive Catalogue of Sanskrit Manuscripts, Vol I, — Orissa State Museum.
13. G. P. (Baroda)—Geetaprakas, Manuscript Oriental Institute, Baroda
14. Historical Development of Indian Music— Swami Prajnanananda, 1960 edition.
15. History of Orissa—Dr H. K. Mahtab, Vol. I, 1959 edition.
16. Later Sangita Literature—Dr. V. Raghavan in two parts—revised edition.
17. Ma-danul Moosiqui of Hakim Mohammad Karam Imam— translated by Govinda Vidyarthi — Sangeet Natak Akademi Bulletin-April, 1959
18. Manasollasa of King Somesvara, Vol. III—Oriental Institute, Baroda, 1961 edition.
19. Ragatarangini of Lochana—Darbhangaraj Series edition, 1933.
20. Ragavibodha of Somanath—Adyar Library, 1945 edition.

21. Sangita Narayanah of Gajapati Sri Narayanadeva—The Orissa Sangeet Natak Akademi, 1966 edition.

22. Sangeet of India — Atiya Begum—1942 edition.

23. S. D. — Sangita Damodarah of Subhankara—Sanskrit College, Calcutta 1960 edition.

24. S. R. — The Sangitaratnakara of Sarngadeva Vols. I and II with Kalanidhi of Kallinatha and Samgitasudhakara of Simhabhupala — The Adyar Library, 1943 (Vol. I) and The Adyar Libray and Research, Centre, 1959 (Vol. II)

25. Sangitakalpalatika of Haladhara Misra, Orissa Museum, Mans. No. Mus. 9

26. Sangitamuktavali of Harichandana — Utkal University, Orissa, 1955, I - Print.

27. Sangitaparijata of Ahovala—Sangita Karyalay, Hathras, 1941 edition

28. Sangitaraja by Maharana Kumbha, Vol. I — Editor (Dr. Km) Premlata Sharma, 1963 edition.

29. Sangitasara of Harinayaka—Manuscript with the editor, Geetaprakas.

30. Sangitasarasamgraha of Narahari Chakravarty—Ramakrishna Vedanta Matha, 1956 edition.

31. Svaramelakalanidi of Ramamatya—Sangita Karyalay, Hathras, 1650 edition.

32. The Gajapati Kings of Orissa—P. Mukherjee

33. The Orissa Historical Research Journal—Vol. III.

34. The Sangitasamayasara of Sangitakara Sri Parsvadeva— Trivandrum, 1925 edition.

